मुहूर्तमिव च ध्यात्वा तद्वाक्यं प्रविमृश्य च ।

१९] शिष्यमाह स्थितं पार्श्वे भारद्वाजमिदं वचः ॥१९॥ [१७

पादैश्चतुर्भिः सहितमिदं वाक्यं समाक्षरैः ।

२०] शोचतोक्तं मया यस्मात्तस्माच्छ्लोको भविष्यति ॥२०॥ [१८

शिष्योऽथ तस्य तच्छ्रुत्वा मुनेर्वाक्यमनुत्तमम् ।

२१] तथेति प्रतिजग्राह गुरोः प्रीतिं प्रदर्शयन् ॥२१॥ [१९

संभाषमाणे एवाथ शिष्येण सहितस्तदा । [N

२२] तमेवं चिन्तयन्नर्थमाश्रमाय न्यवर्तत ॥२२॥ [२०

---

१. ब—मुहूर्तमिह ।

२. ल प्र—तद्ध्यात्वा ।

३. ल प्र प भ—वाक्यं तत् ।

४. प्र—परिमृश्य ।

५. ज त प—भरद्वाज० ।

६. ज ल प्र प भ—संयुक्तमिदं ।

७. भ—वाक्यैः ।

८. रा—०च्छ्लोको । इत्यसत् पाठः ।

९. प—शिष्योऽपि ।

१०. कै—श्रुवतो । पश्चादपरहस्तेन विन्यस्तम् ।

११. प—तथाति ।

१२. ल—प्रति० ।

१३. ल प—विदर्शयत् । प्र भ—विदर्शयन् ।

१४. ल प भ—स भाषमाण । ज ट त—स भाष्यमाण० ।

१५. कै—तमेवं ।

१६. ल—चिन्तयंश्चार्थं० । भ—चर्यमुपायात् ।

१७. भ—आश्रम श्रीमं: ।

तमन्वयाद् विनीतात्मा भारद्वाजो[1] महामतिः[2] ।
२३] पयःकलशमादाय[3] शिष्यैः परमसंमतैः[4] ॥२३॥ [२१
स[5] प्रविश्याश्रमपदं शिष्येण सह धर्मवित् ।
२४] उपविष्टस्ततस्तस्मिन् बभूव ध्यानमाश्रितः[6] ॥[7] २४॥ [२२
आजगाम स्वयं[9] ब्रह्मा लोककर्ता ततः[8] प्रभुः ।[10]
२५] तत्र स्वयंभूर्भगवान्[11] द्रष्टुं तमृषिसत्तमम् ॥[12] २५॥ [२३
वाल्मीकिरपि तं दृष्ट्वा सहसोत्थाय वाग्यतः ।
२६] प्राञ्जलिः प्रणतो भूत्वा तस्थौ[13] परमविस्मितः[14] ॥२६॥ [२४
पूजयामास चैवैनं पाद्यार्घ्यासनवन्दनैः ।
२७] प्रणतो[15] विधिवच्चैनं पृष्ट्वाऽनामयमव्ययम् ॥२७॥ [२५
अथोपविश्य भगवानासने परमार्चिते[16] ।

---

१. रा ज त—भरद्वाजो ।
२. ज त ल प्र प भ ट—महामुनिः ।
३. ल प भ—कलशं पूर्णमादाय । प्र—पूर्णं कलशमा० ।
४. ल—पृष्ठतो मुनिसत्तम । भ-पृष्ठतोऽनुजगाम ह ।
५. ज ब ल ट—संप्रवि० ।
६. प्र प—ध्यानमास्थितः ।
७. ल भ—उपविश्यासने तूष्णीं ध्यानमेवान्वपद्यत ।
८. ज त प्र प ट—ततो ।
९. ज त प्र प ट—स्वयं ।
१०. ल—आजगामाश्रममथो ब्रह्मा लोकपितामहः ।
भ—अथाजगाम भगवान् ब्रह्मा लोकपितामहः ।
११. ल भ—स्वयं ।
१२. प्र प—चतुर्मुखो महातेजाः द्रष्टुं त० ।
१३. ल—तस्मै ।
१४. प्र—०विस्मृतः ।
१५. प—प्रणम्य ।
१६. रा—परमार्चिते । ल—परमोर्चिते । प्र—परमोर्चित ।

२८] वाल्मीकयेऽप्यासनं स दिदेशानन्तरं ततः ॥२८॥ [२६

उपविष्टे च[1] तस्मिंस्तु[2] साक्षाल्लोकपितामहे ।

२९] तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः ॥२९॥ [२७

शोचन्निव स तां क्रौञ्चीं ततः श्लोकमिमं पुनः[3] ।

३०] जगादान्तर्मना[4] भूत्वा[5] दुःखशोकपरायणः ॥३०॥ [२९

कृतं पापात्मना कष्टं व्याधेनानात्मबुद्धिना[6] ।

३१] यत् सुचारुस्वनं क्रौञ्चमवधीदात्मकारणात् ॥[7] ३१॥ [२८

तमुवाच ततो ब्रह्मा प्रहसन् मुनिसत्तमम्[8] ।

३२] महर्षे यदयं[9] प्रोक्तस्त्वया क्रौञ्चवधाश्रयः ॥३२॥ [N

श्लोकः[10] स चास्त्वयं बद्धस्तव वाक्यस्य शोचतः । [३०उ

३३] स्वच्छन्दादेव[11] ते ब्रह्मन् प्रवृत्तेयं[12] सरस्वती ॥३३॥ [३१पू

---

१. ज —च । प— सं ।

२. ल प भ—-ततस्तास्मिन् ।

३. ल प्र प—मुहुः । भ—मुनिः ।

४. प्र प भ-- जगादान्तर्गतमनाः । रा त ट—जगादान्तर्मना भूत्वा ।

ल-—जगादान्त[:]कृतमनाः ।

५. ल प्र प भ—भूत्वा शोक० ।

६ ज त—०नानात्मबु० । प्र-०नानर्थि०० ।

ल—०बुद्धिनः । प—निषादेनाल्पबुद्धिना ।

७. ल यस्स कामात्त[तु?]रं क्रौञ्चमवधीत्तमकारणम् ।

प—-यस्स क्रौञ्चं चारुरवमवधीत्तमकारणम् ।

भ—सुचारुरवं क्रौञ्चमवधीत्तमकारणम् ।

प्र—०क्रौञ्चमवधीत्तमकारणम् ।

८. प—मुनिपुङ्गवं ।

९. प—यपदं । इत्यसत् पाठः ।

१०. ल प्र भ—श्लोक एवास्त्वयं ।

११. के ब भ—स्वच्छन्दाश्चैव । ट—स्वच्छन्दं चैव । त—स्वच्छन्दादेव ।

१२. ब ल प्र प भ ट—प्रवृत्तेयं ।

रामस्य चरितं कृत्स्नं कुरु त्वं मुनिसत्तम[1] । [३१उ
३४] धर्मात्मनो गुणवतो लोके रामस्य[2] धीमतः ।।३४।। [३२पू
वृत्तं प्रथय रामस्य यथा[3] ते नारदाच्छ्रुतम् । [३२उ
३५] रहस्यं च[4] प्रकाशं[5] च यद् वृत्तं[6] तस्य धीमतः ।।३५।। [३३पू
रामस्य ससहायस्य राक्षसानां च सर्वशः । [३३उ
३६] वैदेह्याश्चैव यद् वृत्तं प्रकाशं[7] यदि वा रहः ।।३६।। [३४पू
तच्चाप्यवितथं[8] सर्वं विदितं[9] ते भविष्यति ।[10] [३४उ
३७] सराष्ट्रेण[11] सदारेण[11] राज्ञा दशरथेन यत्[12] ।।३७।। [N
आसितं भाषितं चैव गतं[14] यच्चाप्यनुष्ठितम्[15] ।[16]
३८] यच्चाप्यविदितं[17] किञ्चिद् विदितं ते भविष्यति ।।[18] ३८।। [N

---

१. ब ट त ल प्र प भ—ऋषिसत्तम ।
२. ल—लोके वामस्य । प्र—लोकरामस्य । प भ—लोके रामस्य ।
३. प—यदा ।
४. प्र—रहश्चैव ।
५. ज ट त प्र भ—प्रकाशं ।
६. ल—वार्तां ।
७. कै—प्रकारयं ।
८. कै—तथाप्य० ।
प्र भ—तच्चाप्यविदितं सर्वं । प—यच्चाप्यविदितं किंचिद् ।
९. प्र प भ—विदितं ।
१०. प—अयं श्लोकार्धः ३८ श्लोकस्योत्तरार्धेन संबद्धः ।
११. ल प्र प भ—सदारेण सराष्ट्रेण ।
१२. प—च ।
१३. ट—नास्ति ।
१४. ल भ—मतं । प—मन्त्रं ।
१५. प—चाप्यनुतिष्ठितं ।
१६. ट नास्ति ।
१७. ट—तथाप्य० ।
१८. प्र—सर्वं विदितमेतत्ते मत्प्रसादा [द्] भविष्यति ।

न ते वागनृता काचिदत्र काव्ये भविष्यति ।[2]
३९] कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम् ॥३९॥ [३५
यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ।
४०] तावद् रामायणकथा लोकेषु विचरिष्यति ॥४०॥ [३६
यावद्रामस्य च कथा त्वत्कृता प्रचरिष्यति ।[8]
N] तावदूर्ध्वमधश्च त्वं मल्लोके विचरिष्यसि ॥४१॥ [३७
इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत ।
४१] ततः सशिष्यो वाल्मीकिर्विस्मयं परमं ययौ ॥४२॥ [३८
तस्य शिष्यास्ततः सर्वे गुरोः श्लोकमिमं तदा ।
४२] मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः ॥४३॥ [३९
समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महात्मना ।

---

१. भ—कार्ये ।

२. ट—नास्ति ।

३. रा—कुरु ।

४. प—०ब्धमक० ।

५. ल प्र प भ—प्रचरिष्यति ।

६. ज त ल ट—यावच्च रामस्य क० ।
भ—यावद्रामायणकथा । रा—सराष्ट्रेषु सदारेषु ।

७. ज त—त्वत्कथा ।

८. प—नास्ति ।

९. ज त ल प भ ट—मल्लोकेषु । प्र—स्वर्गलोके ।

१०. ट—चरिष्यति । ज—विचरिष्यति । ल प्र प भ—निवत्स्यसि ।

११. प्र—०रधीयते ।

१२. त—सशाठो ।

१३. भ—ततः शिष्यास्तस्य ।

१४. प्र प भ—जगुः । ल—जंतुः ( जगुः? ) ।

१५. प्र—०रैश्चतुर्भिश्च ।

१६. त ल—महात्मनः ।

४३] सोऽनुव्याहरणाद्[1] भूयः शोकः श्लोकत्वमागमत्[2] ॥४४॥ [४०
तस्य बुद्धिरभूत्तत्र वाल्मीकेरर्थं धीमतः[3] ।
४४] कृत्स्नं रामायणं श्लोकैरीदृशैः[4] करवाण्यहम्[5] ॥४५॥ [४१
धर्मकामार्थसंबद्धं बहुचित्रार्थविस्तरम् ।
४५] समुद्रमिव रम्यार्थं[6] श्लोकेष्वतिरसायनम्[7] ॥४६॥ [N
उदारवृत्तार्थपदै[8] र्मनोरमै[9]स्ततः स रामस्य चकार कीर्तिमान्[10] ।
४६] समाक्षरैः श्लोकशतै[11]र्यशस्विनो यशस्करं काव्यमुदारमग्र्यधीः[12] ॥४७

इत्यार्षे रामायणे[13] आदिकाण्डे[14] ब्रह्मागमनं[15] नाम द्वितीयः[16] सर्गः[16] ॥२॥

---

१. के रा ब-ऽनुव्याहरणात् । २. प्र प भ-०मागतः । ३. प-०केर्भावितात्मनः ।
४. प—श्लोकैरीदृशं, अतः परमधिकः पाठः—
कृत्स्नं रामायणं काव्यमेष वै प्रकरोम्यहम् ।
जगौ स भगवान् कृत्स्नमेतद्वीक्ष्य निशाम्य वै ॥
५. करवाण्यं । इत्यपपाठः । ६. प्र प भ—रम्याख्यं ।
७. ज—श्लोकैः श्रुतिरसायणं ।
त ळ भ ट—श्लोकेश्रुतिरसायनम् । प्र प—श्लोकश्रुतिरसायनं ।
८. ळ—उदर्थवृत्तार्थप० । प्र—उदारवृत्तानुप० । प—उदात्तवृत्तार्थप० ।
रा—उदारवृत्तान्तप० । ९. ळ प्र प भ—मनोहरैः । १०. भ—कीर्तनं ।
११. प्र—श्लोकपदैर्य० ।
१२. ळ प भ—०मुदारधीर्मुनिः । प्र—०मुदारधीः परं । रा—०मग्रधीः ।
१३. ग ज त—रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसाहस्र्यां संहितायां ।
ट—रामायणे वाल्मीकीये चतुर्विंशतिसाहस्र्यां संहितायां ।
प—वाल्मीकीये रामायणे ।
१४. ज प—बालकाण्डे । प्र—नास्ति ।
१५. ळ—ब्रह्माभिगमनं नाम । प्र—नास्ति ।
१६. ब त भ—सर्गः ।

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
१] चकार चरितं चित्रं विचित्रपदमर्थवत् ॥१॥ [१
पवित्रं वैष्णवं दिव्यमिदमाख्यानमुत्तमम् ।
२] वेदैश्चतुर्भिः समितमितिहासं पुरातनम् ॥२॥ [N
श्रावयामास वै विप्रान् सुव्रतान् नियतेन्द्रियान् ।
३] धौम्यमाण्डव्यकुशिकान् सर्ष्टिष्णेनान् सकोहलान् ॥३॥ [N
तौ तु चेक्ष्वाकुदायादौ मुनिवेशौ कुशीलवौ ।
४] धन्यं यशस्यमायुष्यं परं स्वस्त्ययनं महत् ॥४॥ [N
कृतां च तत्वतः कीर्ति[12] राघवस्य महात्मनः ।
५] इहैवार्थश्च धर्मश्च निखिलेनोपपद्यते ॥[15] ५॥ [N

---

१. ल—वाल्मीकिश्च० ।
२. रा —०मुत्तमः । इत्यसत् पाठः ।
३. ज—संमित० । ट प्र भ—सहित० ।
४. ल—सांख्यिषेणान् । रा—सर्ष्टिषणे० ।
प्र—सर्विवसेषान् । प भ—सार्ष्टिषे० ।
५. प्र—सकाशकान् । भ—सकोसलान् ।
६. ल—भाव वैक्ष्वाकु० । प रा—तौ चवेक्ष्वाकु० ।
प्र—तौ वैवेक्ष्वाकुदायादा ।
७. भ—मुनिवेशो । ज—मुनिवेषौ ।
८. क—धान्यं ।
९. ल प्र प भ—स्वर्ग्यं ।
१०. रा ज व ट त—कृतं । ल प्र प—कृता । भ—कृत्वा ।
११. ज व ट त—तत्त्वता । भ —तद्वत: ।
१२. ल—कीर्ती । प्र प—कीर्तिः ।
१३. भ—कामश्च ।
१४. ट—दण्डनीतिश्च वर्तते । त ०केनोपलभ्यते ।
प्र—कामश्च परिकीर्तितः ।
१५. प—इहैवार्थरच निखिलो धर्मश्चैवोपलभ्यते ।

दण्डनीतिश्च विपुला त्रयीवार्ता च कृत्स्नशः ।[1]

६] य इदं शृणुयान् नित्यं यश्चेदं परिकीर्तयेत् ॥६॥ [N

इह भोगान् वरान् प्राप्य देवैर्गच्छति तुल्यताम् ।

७] इक्ष्वाकूणामिदं चैव जनकस्य च धीमतः ॥७॥ [N

पुलस्त्यस्य च देवर्षेः कीर्तनं समुदाहृतम् ।

८] अश्वमेधावसानेऽस्य राघवस्य महात्मनः ॥८॥ [N

कथितं पुष्टिजननमिदमाख्यानमादितः ।

९] अत्र धर्मार्थसंयुक्तं पापानां नाशनं शुभम् ॥९॥ [N

आदिकाण्डमिदं प्रोक्तं विस्तरश्चास्य कथ्यते ।

१०] प्रथमं नारदप्रश्नो नदीगमनमेव च ॥१०॥ [N

पू११] ब्रह्मणो दर्शनं चैव वरप्राप्तेश्च वर्णनम् ।[15]

---

१. ट—नास्ति ।

२. भ—यश्चैनं ।

३. ट—परिकल्पयेत् । ल–परिकीर्तितम् ।

४. प—रम्यं ।

५. त ल प्र प भ ट—च ।

६. ल प—तुष्टि० । प्र—तुष्ट० ।

७. ल—यत्र धर्मा० । प—सर्वधर्मा० । प्र—धर्मकामार्थ० ।

८. प—पावनानां च । ल–पापानां पावनं ।

९. प—पावनम् ।

१०. ल प—०काण्डमिह ।

११. रा भ—विस्तारश्चा० । प्र–विस्तार चा० ।

१२. प—वाल्मीके ।

१३. रा—नारदं प्रश्नो । प्र–नारदः प्रश्नो ।

१४. ल प्र प भ—वरप्राप्तिश्च पुष्कला ।

१५. ल प्र प भ—अतः परमधिकः पाठः—

श्लोकानां परिमाणं च यत्रैतत् परिकीर्त्यते ।
अयोध्यावर्णनं चैव राज्ञो दशरथस्य च ।
अमात्यवर्णनं चैव कौसल्यायाश्च वर्णनं ।

कै—उत्तरपार्श्वे पुनर्विन्यासः ।

पुत्रार्थं च नरेन्द्रस्य मन्त्रेणं समुदाहृतम् ।
१३] अश्वमेधक्रिया चैव वरप्राप्तिश्चं पुष्कला ॥१३॥ [N
भागार्थिनां च देवानामागमः परिकीर्तितः ।
१४] रावणस्य वधोपाये मन्त्रोऽर्थे परिकीर्तितः ॥१४॥ [N
दिव्या च पायसोत्पत्तिः पुत्रजन्म नृपस्य च ।
१५] अंशावतरणं चैवं सुराणां समुदाहृतम् ॥१५॥ [N
कौसल्यायां च रामस्य कैकेय्यां भरतस्य च ।
१६] यमयोश्च सुमित्रायां संभवः समुदाहृतः ॥१६॥ [N
वानराणां च सर्वेषामुत्पत्तिः परिकीर्तिता ।
१७] ततो दशरथस्येह विश्वामित्रेण सङ्गमः ॥१७॥ [N
प्रदानं चैव रामस्य रक्षणं च महाक्रतोः ।
१८] लक्ष्मणानुगमश्चैवं विद्याप्राप्तिश्च पुष्कला ॥१८॥ [N

---

१. के ल रा—मन्त्रेण । प्र प भ—मन्त्रणं । ज ब ट त—सत्रेण ।
२. ल—वरप्राप्तिस्तु पुष्कला । प—राज्ञो दशरथस्य च ।
३. ल प भ—समुदाहृत: ।
४. भ—वधोपायमन्त्रणं । ट त—वधोपाये मन्त्रणं ।
प्र प—वधोपायमन्त्रणं । ल—समुदाहृतम् ।
५. त ट—समुदाहृत: । ल प्र प भ—समुदाहृतम् ।
६. ल—चात्र । प—चापि ।
७. ट—नास्ति ।
८. प्र प भ—कौश० ।
९. ल—संभवा ।
१०. ल—समुदाहृतम् ।
११. ल प्र प भ—राज्ञो ।
१२. ज त ल प भ—रक्षणार्थं । प्र—रक्षणार्थो ।
१३. प्र—महामंत ।
१४. त—०श्चानुगतश्चै० ।

अनङ्गाश्रमवासश्च ताटकावनदर्शनम् ।

१९] ताटकानिधनं चैवं अस्त्रलाभश्च कीर्त्यते ॥१९॥ [N

सिद्धाश्रमनिवासश्च सत्ररक्षणमेव च ।

२०] सुबाहोर्मरणं चात्र मारीचस्य च भर्त्सनम् ॥२०॥ [N

विश्वामित्रस्य चैवर्षेः स्ववंशपरिकीर्तनम् ।

२१] गङ्गायाः संभवश्चैवं पवित्रः परिकीर्तितः ॥२१॥ [N

दिव्यगर्भावपतनं कार्तिकेयस्य संभवः ।

२२] विशालस्य च राजर्षे धर्मस्यं परिकीर्तनम् ॥२२॥ [N

अहल्याशापनिर्मोक्षो मिथिलायां[12]श्च दर्शनम् ।

२३] दर्शनं यज्ञवाटस्य मैथिलस्य च दर्शनम् ॥[13]२३॥[14] [N

चरितं चैव कार्त्स्न्येन कौशिकस्य महात्मनः ।

२४] कथितं चात्र रामस्य शतानन्देन धीमता ॥२४॥ [N

धनुषो भेदनं चैव कन्यायाश्च निवेदनम् ।[14]

---

१. ल—ताराकावनद० । प्र प भ—ताडकावनद० ।

२. ज—ताटकायाश्च निधनं । ल—ताराकायाश्च निधनं ।
त प्र प भ—ताडकायाश्च निधनं ।

३. ज त ल प भ—०र्निधनं ।

४. रा प्र—चैव ।

५. भ—भर्त्सनां ।

६. रा त ल भ—देवर्षेः । प्र—राजर्षेः ।

७. ल प्र प भ—प्रभवश्चैव ।

८. प्र—०गर्भावतरणं ।

९. ल—देवर्षेर् ।

१०. ल प्र प भ—वंशस्य ।

११. ज त ल प्र प भ—०शापमोक्षश्च ।

१२. के रा ब—मैथिलस्य च ।

१३. के रा ब—नास्ति ।

१४. प—नास्ति ।

१५. के ब—दर्शनं ।

२५] राज्ञो दशरथस्येह जनकस्य च सङ्गमः ॥२५॥ [N
सीतादीनां च कन्यानां विवाहः समुदाहृतः ।
२६] वधूर्गृहीत्वा नृपतेर्यानं दशरथस्य च ॥२६॥ [N
समागमश्च रामस्य जामदग्न्येन धीमता ।
२७] जामदग्न्यस्य लोकानां वधश्चैव परिकीर्तितः ॥२७॥ [N
अयोध्यासंप्रवेशश्च प्रवासो भरतस्य च ।
२८] अयोध्यावासिनां चैव प्रमोदः परिकीर्त्यते ॥२८॥ [N
इत्येतत् प्रथमं काण्डमादिकाण्डमिहोच्यते ।
२९] सर्गाश्चैव चतुःषष्टिः श्लोकानां चैव कीर्त्यते ॥२९॥ [N
द्वे सहस्रे शतान्यष्टौ श्लोकाः पञ्चाशदेव तु ।
३०] बालचर्या च यत्प्रोक्ता राघवस्य महात्मनः ॥३०॥ [N
N] काण्डः १ श्लोकाः २८५० सर्गाः ६४ ॥ [N
अतः परं द्वितीयं तु अयोध्याकाण्डसंज्ञितम् ।
३१] यत्राभिषेकसङ्कल्पो व्याघातश्चैव वर्ण्यते ॥३१॥ [N

---

१. ळ—सम्भवः । इत्यपपाठः ।

२. रा ब—वधूं ।

३. ज त ळ प भ—वधश्चात्रानुकीर्तितः ।

प्र—रोधस्य परिकीर्तितः ।

४. ळ प भ—परिकीर्तितः ।

५. प—०काण्डमिवोच्यते ।

६. ट—सर्गाश्चात्र । प—सर्गाना[णां] च ।

७. ट प्र—चात्र ।

८. ळ प्र प भ—हि ।

९. प्र प भ—तद् ।

१०. ज ब ळ प्र प भ ट—कीर्त्यते ।

कैकेय्यनुनयश्चैव शोको दशरथस्य च ।
३२] वनप्रयाणं रामस्य लक्ष्मणानुगमस्तदा[2] ॥३२॥ [N
विषादः प्रकृतीनां च तथैव च विसर्जनम् ।
३३] निषादाधिपसंवासः[3] सूतस्य च विसर्जनम् ॥३३॥ [N
गङ्गायाश्चाभिसन्तारो भारद्वाजस्य दर्शनम् ।[5]
३४] वास्तुकर्मनिवेशश्च चित्रकूटे महागिरौ ॥३४॥ [N
उपावृत्ते सुमंत्रे च राज्ञो मोहागमः पुनः ।
३५] स्वशापकथनं चैव स्वर्गप्राप्तिर्नृपस्य च ॥३५॥ [N
भरतागमनं तूर्णं तथा राजगृहादपि ।
३६] रामप्रसादनं चार्थे भरतस्य महात्मनः ॥३६॥ [N
गमनं कीर्त्यते चैव भारद्वाजस्य चाश्रमे ।[13]
३७] दर्शनं चैव रामस्य पितुश्च सलिलाक्रिया ॥३७॥ [N

१. के रा त—कैकेय्यानुन० । ल—कैकेय्यश्चनय० ।
ज प्र—कैकेय्यमुन० । प—कैकेय्यनुमतश्चैव ।
२. ल प भ—०णानुगतिस्तथा । रा ज त प्र ट —०णानुगमस्तथा ।
३. ज त ल प्र प भ—०पसंवादः ।
४. ल—नास्ति ।
५. ल प्र भ—अतः परमधिकः पाठः—
भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ।
६. के—सुमित्रे ।
७. रा—तु ।
८. ल प भ—परः । ट—ततः ।
९. ज त ट—रामप्रसादनार्थे च । ल प्र प भ—रामप्रसादनार्थं च ।
१०. ट—भरतागमनं तथा ।
११. ल प्र प भ—वासो ।
१२. रा ब ज प्र प ट—भरद्वाजस्य ।
१३. ट—नास्ति ।

३८] प्रसादनं च रामस्य बहुशः परिकीर्त्यते[1] ।
जाबालेर्यत्र वाक्यानि वामदेवस्य[2] चोभयोः ॥३८॥[3] [N

३९] इक्ष्वाकूणां च वंशस्य कीर्तनं समुदाहृतम् ।[4]
प्रतिज्ञां[5] चैवं रामस्य[6] गमने कोसलान् प्रति ॥३९॥ [N

४०] पादुकाहरणं चैवं[7] भरतस्य[8] विसर्जनम् ।
नन्दिग्रामप्रवेशश्च मातॄणां च विसर्जनम् ।[9]॥४०॥[10] [N

४१] अयोध्यासंप्रवेशश्च शत्रुघ्नस्य महात्मनः ।
काण्डं द्वितीयमित्युक्तमयोध्याकाण्डसंज्ञितम् ॥४१॥ [N

४२] अशीतिः संख्यया[11] सर्गाः श्लोकानां चात्र कीर्त्यते[12] ।
त्रीणि श्लोकसहस्राणि नव श्लोकशतानि च ।

४३] श्लोकानां द्वे शते चैव पुनः[13] श्लोकाश्च सप्ततिः ॥४२॥ [N

N] काण्डः[14] २ सर्गाः ८० श्लोकाः ४१७०[15] ॥[16] [N

---

१. ज त ल प भ—परिकीर्तितं । ट—परिकीर्तितः ।

२. ल भ—रामदेवस्य चो० । इत्यपपाठः । ट—वंशस्य कथनं तथा ।

३. प्र—नास्ति ।

४. ट—नास्ति ।

५. ल प भ—अप्रतिज्ञा च । प्र—स्वप्रतिज्ञा च ।

६. ल—धर्मस्य ।

७. भ—चापि ।

८. कै—भरतस्यागमः पुनः ।

९. त—नास्ति ।

१०. ल—अतः परमधिकः पाठः—

प्रसादनं च रामस्य बहुशः परिकीर्तितम् ।

११. ल—संज्ञया ।

१२. ट—कीर्तनम् ।

१३. ल प्र प भ—भूयः ।

१४. त—अयोध्याकाण्डः ।

१५. त—४३७० ।

१६. ल प्र प भ ट—नास्ति ।

अतः परं[1] तृतीयं तु आरण्यकमिति स्मृतम् ।
४४] यत्र रामो महाबाहुर्दण्डकं[2] प्राविशद्वनम् ॥४३॥ [N
अनसूयासमस्यां[3] चाप्यङ्गरागस्य[4] चार्पणम् ।
४५] विराधदर्शनं चैव वधश्च समुदाहृतः ॥[5]४४॥ [N
ऋषीणां दर्शनं चैव मैथिल्याश्चैवं[6] सान्त्वनम् ।[7]
४६] शरभङ्गाश्रमप्राप्तिर्महेन्द्रस्य च दर्शनम् ॥४५॥ [N
सुतीक्ष्णाश्रमसंप्राप्तिः[8] संवादः सह सीतया ।
४७] मन्दकर्णेश्च कथितं शक्रस्य च[9] विसर्जनम् ॥४६॥ [N
इल्वलस्य[10] च संवादः कीर्तनं च दुरात्मनः ।
४८] अगस्त्याश्रमवासश्च[11] तथा संपरिकीर्तितः[12] ॥४७॥ [N
दर्शनं पञ्चवट्यास्तु[13] जटायोश्चैव दर्शनम् ।[14]

१. ळ भ—काण्डं । प्र प—काण्ड० ।

२. ट—०र्दण्डकान् ।

३. ळ प्र प—अनुसूया० । ट—०यासमस्यां ।

४. ट प्र प—च अङ्गरागस्य ।

५. ट—नास्ति ।

६. भ—वैदेह्याश्चापि । ळ प्र—मैथिल्याश्चापि ।

७. ट—शरभङ्गाश्रमे वासं वासवस्य ।

८. ळ—सतीक्ष्णस्याश्रमप्राप्तिः । भ—सुतीक्ष्णस्याश्रमप्राप्तिः ।

९. प्र प—यत्र शक्रवि० । रा ळ—यत्र शत्रुर्वि० ।

१०. रा—इल्वकस्य ।

११. रा—०श्रमसंवासः ।

१२. ट—अगस्त्याच विसर्जनम् ।

१३. ज त ळ प्र प भ—पञ्चवट्याश्च ।

१४. ट—समागमं कबंधेन वासं पंचवटे तथा ।

४९] जनस्थाननिवासश्च शिशिरस्य च वर्णनम् ॥[1]४८॥ [N

[2]स्मरणं भरतस्यार्थं कैकेय्याश्चैव गर्हणम् ।[3]

५०] संवादैः शूर्पणखया विरूपकरणं तथा ॥४९॥ [N

खरस्य च वधो घोरो दूषणत्रिशिरोवधः ।[5]

५१] लङ्काप्रवेशो राक्षस्याः शूर्पनख्याः प्रकीर्तितः ॥[4]५०॥ [N

सीताया लोभनं चैव रावणस्यानुशब्दितम् ।

५२] मारीचाश्रमसंप्राप्ती रावणस्य दुरात्मनः ॥५१॥[6] [N

मारीचश्च मृगो भूत्वा वैदेहीं समलोभयत् ।

५३] लोभयित्वा च वैदेहीं राघवस्यापकर्षणम् ॥५२॥[7] [N

मारीचस्य वधश्चैव लक्ष्मणस्य[8] विगर्हणम् ।[9]

५४] सीतायां हरणं चैव सौमित्रेश्चात्र सङ्गमः ॥५३॥[10,11,12] [N

---

१. ट—नास्ति ।

२. प—भरतस्यापि ।

३. ह—हासः ।

४. ल प भ—शूर्पनख्याश्च । ट—शूर्पनखायाश्च । कै रा ज ब त—०नखया ।

५. ज त—खरदूषणयोश्चैव वधस्त्रिशिरसस्तथा ।

ट—वधं खरत्रिशिरसोः कथनं रावणस्य च ।

६. प्र—रावणस्य च शा० ।

७. ज त—राघवस्याभिक० ।

८. भ—लक्ष्मणस्यापकर्षणम् ।

०स्यापगर्हणमिति दक्षिणपार्श्वे पुनर्विन्यस्तः पाठः ।

९. ज—नास्ति ।

१०. प—सीताप्रहरणं ।

११. ज त ल—संकरश्च महात्मनः ।

ब रा—सत्कारश्च महात्मनः । प—लक्ष्मणस्य च संगतः ।

१२. ट—मारीचप्रार्थनाशं च वैदेहीहरणं तथा ।

प्र प भ—अतः परमधिकः पाठः—

जटायुषो वधश्चासीत् सीतायाश्च प्रदेशनम् ।

लक्ष्मणस्य च संवादो राघवेण महात्मना ॥

कै—उत्तरपार्श्वे पुनर्विन्यासः ।

हृतां च जानकीं मत्वा विलापो राघवस्य च ।[1]

५६] जटायोर्दर्शनं चैव सत्कारश्च महात्मनः ॥[2]५४॥[3] [N

गृध्रराजस्य[4] रामेण कृता चैव जलक्रिया[5] ।

५७] कबन्धस्य वधः मोक्षः स्वर्गप्राप्तिस्तु[6] पुष्कला ॥[7]५५॥ [N

कबन्धस्य च वाक्येन सुग्रीवान्वेषणं परम्[8] ।

५८] शबरीदर्शनं[9] चैव पम्पायां[10] परिदेवनम्[11] ॥५६॥[12] [N

इति काण्डं[13] तृतीयं तु[14] आरण्यकमिति स्मृतम् ।

५९] सर्गाणां तु[15] शतं चैव सर्गाश्चैव चतुर्दश ॥५७॥ [N

चत्वारीह सहस्राणि श्लोकानां कथितानि[16] वै ।

---

१. ट—जटायोर्निधनं चैव विलापो राघवस्य च ।

२. ट—नास्ति ।

३. ज त भ—नास्ति ।

४. ज त—खगराजस्य । प्र—गजराजस्य ।

५. कै—भअलकिक्रियेति शोधितः पाठः ।

६. ज त प्र प भ—०प्राप्तिश्च ।

७. ट—कबंधदर्शनं [चैव] कबंधस्य वधं तथा ।

८. ज त—ततः ।

९. ट—शबर्या द० ।

१०. ज त ट—पंपायाः ।

११. रा प—परिवेदनम् ।
ज त—चैव दर्शनम् । ट—दर्शनं तथा ।

१२. ट—अतः परमधिकः पाठः—
विलापं चैव पंपायां राघवस्य महात्मनः ।

१३. रा प्र प—काण्डतृतीयं ।

१४. प—तद् ।

१५. ज त प्र ट—च ।

१६. ज त प्र प भ ट—कीर्तितानि च ।

६०] शतं चैवात्र विज्ञेयं श्लोकाः पञ्चाशदेव[1] तु ॥५८॥ [N

N] काण्डः ३ सर्गाः ११४ श्लोकाः ४१५०[2] ॥[3] [N

अतः[4] काण्डं चतुर्थं तु कैष्किन्धिकमिति स्मृतम्[5] ।

६१] ऋष्यमूकगिरिप्राप्ती[6] राघवस्य[7] महात्मनः[8] ॥५९॥ [N

हनुमद्दर्शनं चैव संवादश्चात्र[9] कीर्त्यते ।

६२] आरोहणं च शैलस्य ऋष्यमूकस्य कीर्तितम् ॥६०॥[10] [N

रामसुग्रीवसख्यं[11] च वालिपौरुषकीर्तनम् ।

६३] सप्ततालविभेदश्च प्रत्ययोत्पादनं तथा[12] ॥६१॥[13] [N

वालिसुग्रीवयुद्धं च[14] वालिनो वध एव च ।[13]

६४] अन्तःपुरविलापश्च ताराकारुण्यमेव[15] च॥६२॥[16] [N

---

१. त—पञ्चदशैव ।

२. त–४१५० ।

३. ल प्र प भ—नास्ति ।

४. ज त ट—अतः परं प्रवक्ष्यामि ।

प्र—चतुर्थं तु ततः काण्डम् ।

५. कै ब ल—कैष्किन्धिक० । प–किष्किन्धमिति संज्ञितम् ।

ट प—किष्किन्धाकाण्डसंज्ञितम् । प्र–किष्किन्ध्यां परिकीर्त्यते ।

६. ट—ऋष्यमूकाभिगमनं ।

७. ज—रामस्य च । ट—सुग्रीवेण ।

८. ठ—समागमः ।

९. प्र प भ—०श्चैव ।

१०. ट—नास्ति ।

११. कै—०सख्यं ।

१२. कै—हरेः ।

१३. ट—प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम् ।

वालिप्रमथनं राज्ये सुग्रीवप्रतिपादनम् ॥

१४. प्र—तु ।

१५. कै—०ष्य एव ।

१६. ठ—ताराविलापसमनं वर्षारात्रिनिवासनम् ।

सुग्रीवस्याभिषेकश्च करणं[1] चाश्रमस्य च ।

६५] विलापो राघवस्यात्र लक्ष्मणेन च सान्त्वनम् ॥६३॥[2] [N

प्रावृड्विलापश्चैवात्र शरद्वर्णनमेव च ।

६६] विलापश्चैव शरदि समयस्य च लंघनम् ॥६४॥[3] [N

सुग्रीवं प्रति रामस्य कोपो यत्र च कीर्तितः[4] ।

६७] रामस्य कोपं विज्ञाय लक्ष्मणस्य[5] च संभ्रमः ॥६५॥[6] [N

प्रशमो[7] लक्ष्मणस्याथ दौत्येन गमनं तथा[8] ।

६८] सुग्रीवस्य यथा चात्र गमनं राघवाश्रमे[9] ॥६६॥[10] [N

प्रसादनं[11] च रामस्य वानराणां च संग्रहः[12] ।

६९] पृथिव्या वर्णनं[13] सर्वं[14] सुग्रीवेण महात्मना ॥[15]६७॥ [N

प्रस्थापनं वानराणामङ्गुलीयस्य चार्पणम् ।

७०] हनुमत्प्रभृतीनां च विन्ध्यपर्वतलंघनम् ॥६८॥[16] [N

---

१. प्र—वालिपुत्रसमर्पणम् ।

२. ट—नास्ति ।

३. ट—नास्ति ।

४. ज त प भ—प्रकीर्तितः ।

५. प—लक्ष्मणेन ।

६. ट—कोपं राघवसिंहस्य बालानामुपसंग्रहं ? ।

७. प्र—प्रेषणं ।

८. त प्र प—तथा ।

९. प भ—०श्रमम् ।

१०. ट—नास्ति ।

११. त—प्रसादेन ।

१२. ज त—सङ्गमः ।

१३. ज त—वरणं ।

१४. ज त प्र प भ—चैव ।

१५. ट—दिक्षु प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ।

स्वयंप्रभागुहायाश्च प्रवेश इह कीर्तितः ।[1][2]
७१] अप्रदृत्तौ च वैदेह्या विषादगमनं महत् ॥६९॥ [N
प्रायोपवेशनं चात्र वानराणां महात्मनाम् ।
७२] दर्शनं चात्र सम्पातेर्गृध्रराजस्य धीमतः ॥७०॥[4] [N
N] निवेदनं च लङ्काया गृध्रराजेन धीमता ।
चतुर्थमेतत् काण्डं तु कैष्किन्धिकमिति स्मृतम् ॥७१॥ [N
७३] सर्गाश्चैवात्रविज्ञेयाश्चतुःषष्टिस्तु संख्यया ।
श्लोकानां द्वे सहस्रेण अष्टौ श्लोकशतानि च ।
७४] श्लोकानां च शतं ज्ञेयं पञ्चविंशतिरेव च ॥७२॥ [N
N] काडः ४ सर्गाः ६४ श्लोकाः २९२५ ॥[13] [N
अतः परं प्रवक्ष्यामि काण्डं सुन्दरसंज्ञितम् ।

---

१५. ट— अङ्गुलीयप्रदानं च तथैव विकदर्शनम् ।
१. प्र—०गुहायाञ्च ।
२. ज त प्र— परिकीर्तितः । प—इह कीर्त्यते ।
३. भ—चैव ।
४. ट—प्रायोपवेशनं चैव सम्पातेश्चैव दर्शनम् ।
५. त—निदर्शनं ।
६. ज त ट—कीर्तितम् ।
७. प—वै ।
८. ब—कैष्किन्दिक० । ज त प्र भ—कैष्किन्ध्य० ।
ल—किष्किंदा० । प ट—किष्किधा० ।
९. ज त ल प्र प भ ट—संज्ञितम् ।
१० ज त ल—संख्यया ।
११. ज ब त ल प भ ट—सहस्रे च ।
१२. रा—वा ।
१३. प्र प भ -नास्ति ।

७५] हनुमत्प्लवनं यत्र सुरसायाश्च दर्शनम् ॥७३॥ [N
मैनाकस्य गिरेश्चैव दर्शनं परिकीर्तितम् ।
७६] निधनं सिंहिकायाश्च लङ्कादर्शनमेव च ॥७४॥ [N
प्रवेशश्चैवं लङ्कायां वर्णनं विचयस्तथा ।
७७] मार्गणं चैव वैदेह्या रावणान्तःपुरे शुभे ॥७५[8]॥ [N
N] दर्शनं पुष्पकस्येह आपानस्य च दर्शनम् ।[10]
दर्शनं राक्षसेन्द्रस्य रावणस्य दुरात्मनः ॥७६॥ [N
७८] विचयः पुष्पकस्येह जानक्याश्चैव मार्गणम् ।
अदर्शने च वैदेह्याः शोकोपगमनं तथा ॥७७॥ [N
७९] प्रविश्याशोकवनिकां वैदेह्याश्चैव दर्शनम् ।
प्रवेशो रावणस्येह रक्षसः प्रमदावनम् ॥७८॥ [N
८०] प्रलोभनं च सीताया रावणस्य च भर्त्सनम् ।

---

१. ल—हनुमल्लंघनं । कै—०प्लवणं । रा—०मत्प्लवनं ।
२. ज त प्र ट—चैव ।
३. ल—स्वरसायाश्च । ज त ट—सिंहिकायाश्च ।
४. प्र—मेनाकस्य ।
५. ब—प्रवेश एव ।
६. प्र—लङ्कायां ।
७. कै—विजय० । प्र—निचय० ।
८. ट—नास्ति ।
९. ब रा ल—रक्षसां प्रमदावनम् ।
१०. ट—नास्ति ।
११. ज त—प्रवेशः । ट—प्रवेशे ।
ब रा ल—नास्ति । कै—दक्षिणपार्श्वे अपरहस्तेन पुनर्विन्यासः ।
१२. प्र—निचयः । भ—विजयः ।
१३. प्र—अदर्शनं च । ज त ट—अदर्शनेन ।
१४. कै—राक्षसेन्द्रस्य ।
१५. प्र—०दावने ।

पृ८१] तर्जनं राक्षसीनां च हनुमद्दर्शनं तथा ॥७९॥[3] [N
चूडामणिप्रदानं च प्रतिसन्देश एव च ।
८२] वनप्रभङ्गः क्रूराणां राक्षसीनां च गर्जनम् ॥[6]८०॥ [N
पृ८३] किंकराणां वधश्चैव मन्त्रिपुत्रवधस्तथा ।[8]
कीर्तितं दुर्गयुद्धं च हनुमन्मेघनादयोः ॥८१॥[9] [N
८४] ब्रह्मास्त्रेण च बन्धो वै[10] मारुतेः परमाद्भुतः ।
निवेदनं च दूतस्य भर्त्सनं च हनूमतः ॥८२॥[11] [N
८५] लाङ्गूलोद्दीपनं चैव लङ्कादाहस्तथैव च ।[12]
सीताया हर्षणं भूयः प्रत्यागमनमेव च ॥८३॥ [N
८६] जाम्बवत्प्रमुखैश्चैव हरिभिः सह संगमः ।
तथा मधुवनप्राप्तिर्मधूनां च विलोपनम् ॥८४॥ [N

---

१. भ—तर्जितं । प्र—गर्जितं ।
२. ब—राक्षसानां ।
३. ट—नास्ति ।
ज त प्र प भ—अतः परमधिकः पाठः—
अभिज्ञानप्रदानं च सीतासम्भाषणं तथा ।
४. ज रा त प्र प भ—राक्षसानां ।
५. ज त प्र भर्त्सनम् । प भ—तर्जनम् ।
६. ट—मणिप्रदानं सीताया वनभङ्गं तथैव च ।
७. रा—किंकरीणां ।
८. ट—राक्षसीविद्रवं चैव किङ्कराणां वधं तथा ।
९. ज त प्र प—द्वन्द्वयुद्धं ।
१०. रा—संबन्धो । प—०स्य ।
११. ट—प्रहर्षं वानरेन्द्रस्य लङ्कादाहाभिमर्दनम् ।
१२. त प भ—०संदीपनं ।
१३. ज त प्र प भ—दर्शनं ।
१४. प—सङ्गमस्तथा ।
१५. ज त—विलुंठनम् । ब—विक्षोभनम् । प—विक्षेपणम् । भ—विलापनम्

८७] दर्शनं देवमार्गस्य भंगो मधुवनस्य च ।
अंगदप्रमुखानां च हरीणां रामदर्शनम् ॥८५॥ [N

८८] हनूमतः परिष्वंगो राघवेण महात्मना ।
प्रवृत्तिश्चैव सीताया मणिदानं तथैव च ॥८६॥[5] [N

८९] लंकाया दर्शनं चैव दर्शनं रावणस्य च ।
सीताया दर्शनं चैव प्रतिसंन्देश एव च ॥८७॥[7] [N

९०] दुर्गकर्मविधानं च राक्षसानां विचेष्टितम् ।
अशोकवनिकाभंगं दुर्गस्य च विनाशनम् ॥८८॥[10] [N

९१] यत्रैतद् कथयामास हनूमान् राघवाय वै ।[11]
यत्र सुग्रीवसहितो राघवः सहलक्ष्मणः ॥८९॥ [N

९२] महता हरिसैन्येन प्रययौ दक्षिणामुखः ।
सर्वे च सहितो[12] यत्र निविष्टाः सागरं प्रति ॥९०॥ [N

---

१. रा ब ल--संगो ।
२. ब—राक्षसानां विचेष्टितम् ।
अयं हि पाठः ८८ श्लोकस्य द्वितीयः पादः ।
हनूमत इत्यादिर्दुर्गकर्मेत्यन्तो मध्यस्थः पाठो नास्ति ।
प—कपीनां राम० ।
३. ट—प्रतिप्रयाणमेवाऽपि मधूनां भक्षणं तथा ।
४. कै—हनुमतः ।
५. ट—राघवाश्वासनं चापि मणिनिर्यातनं तथा ।
६. प—राघवस्य ।
७. रा ल ट—नास्ति । कै—पश्चिमेपार्श्वेऽपरहस्तेन पुनर्विन्यासः ।
८. ल—०र्गकर्मद्वा० ।
९. त प—०कामङ्गो ।
१०. ट—नास्ति ।
११. ज त—यदेतद् ।
१२. ज त ढ—०स्तत्र ।

९३] इत्येतत् सुन्दरं काण्डं पञ्चमं परिकीर्तितम् ।
सर्गाणामत्र संख्या च काण्डे सुन्दरसंज्ञिते[3] ॥२१॥ [N
९४] चत्वारिंशत् त्रयश्चैव सर्गाश्च समुदाहृताः ।
पू९५] श्लोकानां द्वे सहस्रे च चत्वारिंशच्च पंचं च ॥९२॥ [N
N] कांडः ५ सर्गाः ४३ श्लोकाः २०४५ ॥ [N
उ९५] अतः परं तुं षष्ठं चं युद्धकाण्डमिति स्मृतम् ।
यत्र रामो महाबाहुः सागरं समुपस्थितः ॥९३॥ [N
९६] यत्र लंकां जिगंमिषु मंत्रयामास राघवः ।
प्राप्तं च राघवं श्रुत्वा मन्त्रयामास रावणः ॥[15]९४॥ [N
९७] शंमार्थी यत्र रामेण ज्येष्ठमाह विभीषणः ।
मुच्यतां मैथिली[17] राजन् स्वस्त्यस्तु नगरस्य नः ।

---

१. ज त प्र प ट—पंचमं ।
२. ज त प्र प ट—सुन्दरं ।
३. ल—संज्ञिके ।
४. ज त प्र प ट—सर्गाः सम्यगु० ।
५ ल—सहस्रं ।
६. रा—पंचक ।
७. त—सुन्दरकांडं । ल प्र प भ—नास्ति ।
८. ल प्र प भ—नास्ति ।
९. प्र प भ—नास्ति ।
१०. प्र भ ट—च ।
११. त—षष्ठे ।
१२. प्र भ—तु । प—वै ।
१३. रा—समरं ।
१४. ल प्र—लङ्काजिग० ।
१५. ट—नास्ति ।
१६. प्र—समर्थी । भ—समार्थे[ र्थी ? ] ।
१७. ज त—जानकी ।
१८. प्र—च ।

९८] एतद्धि परमं श्रेयो विपरीतो[1]ऽनयो भवेत् ॥९५॥[2] [N
एवमुक्तो दशग्रीवः क्रोधसंरक्तलोचनैः[3] ।
९९] जघान यत्र पादेन भ्रातरं वै विभीषणम् ॥९६॥[2] [N
रावणं च [4]परित्यज्य चतुर्भिः सचिवैः सह ।
१००] आगच्छद्राघवाभ्याशं[5] गदापाणिर्विभीषणः ॥९७॥[6] [N
अभिषिक्तश्च रामेण लंकाराज्ये विभीषणः ।[7]
१०१] सागरात्तोयमादाय प्रयतेन[8] महात्मना ॥[9] ९८॥ [N
यत्र रामस्य संरम्भः समुद्रस्य च दर्शनम् ।
१०२] नलसेतुक्रिया चैव सागरानुमते तथा ॥९९॥[10] [N
तरणं चैव घोरस्य सागरस्य महात्मनः[11] ।
१०३] सुवेलो[12]सादनं चैव चारप्रणिधिरेव च ॥१००॥[13] [N

१. ज त ल प्र प—विपरीतेऽन० ।

२. ट—नास्ति ।

३. रा—क्रोधः संरक्त० ।

४. प्र—परिसंत्यज्य । ज त–संपरि० । ळ–तु परि० ।

५. प्र प भ—०वाभ्यासं ।
ज ब–पुनः शोधनरूपेण शकारस्थाने सकारः कृतः । रा–०वाधिशं ।

६. ट—विभीषणेन संसर्गःवधोपाय निवेदनम् ।
अत्रान्यैः सह कथाव्यत्यय इति मूलेन विवेचनीयम् ।

७. ज ब रा त ळ—नास्ति । कै.–उत्तरपार्श्वेऽपरहस्तेन पुनर्विन्यासः ।

८. ज त प्र—प्रयत्नेन । प–०यमादायाप्रंतेन ।

९. प्र—अतः परमधिकः पाठः—
यत्र···सङ्गतोसौ महात्मना । ट—नास्ति ।

१०. ट—संग्रामं च समुद्रस्य नले सेतोश्च बंधनम् ।

११. ज त—महाद्भुतम् ।

१२. ळ—०कासादरं ।

१३. ट—नास्ति ।

शुकसारणवाक्यं च वानरानीकदर्शनम् ।
१०४] मन्त्रणं राक्षसेन्द्रस्य मायारामशिरः क्रिया ॥१०१॥ [N
वाक्यानि सरमायाश्च सीताऽऽश्वासनमेव च ।
१०५] यत्र माल्यवतो वाक्यं लङ्कायां गुप्तिरेव च ॥ १०२॥ [N
मन्त्रणं राघवबले चराणां च प्रवेशनम् ।
१०६] सुवेलारोहणं चैव तथा लंकाऽवरोधनम् ॥ १०३॥ [N
समारंभश्चं युद्धस्य द्वन्द्वयुद्धप्रवर्तनम् ।
१०७] ससुग्रयज्ञकोपाधिर्वधो यत्राशु शब्दितः ॥ १०४॥ [N
रात्रियुद्धविधानं च शरबन्धस्तथैव च ।
१०८] सुपर्णदर्शनं चैव अस्त्रबन्धस्य मोक्षणम् ॥१०५॥ [N

---

१. प्र—शुकसारण० ।
२. रा—०रानेकद० ।
३. ट—नास्ति ।
४. प—सीतानंदनमेव० ।
६. प्र—तत्र ।
५. प्र—वाल्यवतो । प—माल्यावता ।
७. ज ब त ल प भ—चाराणां ।
८. ब—प्रहर्षणम् ।
९. ट—प्रभावं च समुद्रस्य रौद्रं लङ्कोपमर्दनम् ।
१०. प—यत्रारंभ० । त ज—आरम्भश्चैव ।
११. प्र—युद्धस्य ।
१२. प—०द्धप्रवर्तने ।
१३. रा ब ल ट—नास्ति । कै—पुनरपरहस्तेनोत्तरपार्श्वे विन्यासः ।
१४. रा ब ल प्र भ—०यज्ञकोपादिवधो ।
प—सुसग्रयज्ञकोपादिवधो ।
१५. ज त—नास्ति ।
१६. ज त—सर्पबंधस्त० ।
१७. प्र—शरबन्धविमोक्षणम् ।

धूम्राक्षस्य वधश्चैव तथैवाकम्पनस्य[1] च ।
१०९] प्रहस्तस्य वधश्चैव प्रभङ्गो रावणस्य च[2] ॥१०६॥[3] [N
दुर्गकर्मविधानं च कुंभकर्णप्रबोधनम् ।
११०] दर्शनं कुंभकर्णस्य संप्रश्नो रावणस्य[4] च ॥ १०७॥[5] [N
निर्याणं कुंभकर्णस्य वानराणां च संभ्रमः ।
१११] सुग्रीवग्रहणं चैव प्रमोक्षश्चात्र कीर्त्यते ॥१०८॥ [N
वधश्च कुंभकर्णस्य राघवात् समुदाहृतः ।[1]
११२] नरकान्तवधश्चात्र[6] देवान्तकवधस्तथा[7] ॥१०९॥[8] [N
महापार्श्ववधश्चात्र[9] अतिकायवधस्तथा[10] ।
११३] मेघनादास्त्रमोहश्च[11] ससैन्ये राघवे तथा ॥११०॥ [N
ओषध्यानयनाच्चापि[12] प्रबोधश्च[13] हनूमतो[14] ।

---

१. प्र—०वानस्यकस्य ।
२. प्र—नास्ति ।
३. ट—नास्ति ।
४. ज त ल प्र प—रावबस्य ।
५. ट—अत आरम्य ११२ श्लोकान्तस्य पाठस्य स्थानेऽयं पाठो विज्ञेयः—
कुम्भकर्णस्य च वधं मेघनादवधं तथा ।
अतः परश्चेत्यपि पाठः—रावणस्य विनाशं च सीताप्राप्तिं तथैव च ।
अत्रायं पाठो विचारणीयः ॥
६. ज त—नरान्तकवधश्चैव ।
प्र प भ—नरांतकवधश्चात्र । रा—नरकांतवधश्चैव ।
७. ब—देवकान्तक० ।
८. ज त प्र प भ—अतः परमधिकः पाठः—
महोदरवधश्चैव वधस्त्रिशिरसस्तथा ।
९. प—महायश्ववधश्चात्र । त भ—०र्श्ववधश्चैव ।
१०. त—अग्निकायव० । भ—अतिपार्श्वव० ।
११. ल—मेघनादास्त्रमोहश्च । रा—मेघनादास्तमोहाश्च ।
ज त—मेघनादास्त्रमोहश्च ।
१२. कै ल—ओषध्यानयनाश्चापि । रा ज ब त—०ध्यानयनश्चापि ।
प्र—०नयनश्चापि । प—ओषध्यानयनं चापि ।
१३. ज त—संप्रबोधो ।
१४. ल—हनूमतः ।

११४] उल्कामिहारयुद्धं च वधः कुंभनिकुंभयोः ॥१११॥ [N

मकराक्षवधश्चात्र निर्गमो रावणेः पुनः ।

११५] मायासीतावधश्चात्र मेघनादवधस्तथा ॥११२॥ [N

क्रोधश्च राक्षसेन्द्रस्य तथाऽनिष्टानकं महत् ।

११६] रावणस्य च निर्याणं विरूपाक्षवधस्तथा ॥११३॥ [N

पू११७]मत्तस्यापि वधश्चात्र उन्मत्तवधं एव च ।

राघवस्य च वाक्यानि भर्त्सनं रावणस्य च ॥११४॥ [N

११८] रामरावणयोश्चैव अस्त्रयुद्धं महात्मनोः ।

लक्ष्मणस्य वधश्चैव विलापो राघवस्य च ॥११५॥ [N

११९] ओषध्यानयनं चैव लक्ष्मणोत्थानमेव च ।

---

१. ज त—उल्कानीहारयु० । प्र—उल्कामिहारयु० । प—उल्कानीतार यु० । भ—उल्काभीहारयु० ।

२. ज रा त—०धश्चैव ।

३. ब—निर्गमं ।

४. ज त प—रावणस्य च ।

५. प्र—०रिष्टानकं । भ—निस्सारणकं ।

६. रा ब—नास्ति । कै–पूर्वपार्श्वेऽपरहस्तेन विन्यासः । ट—अतः परं ११८ श्लोकान्तः पाठो नास्ति ।

७. ज—वधश्चैव ।

८. त—तन्मत्त० ।

९. त—रावणस्य ।

१०. ज त प्र भ—शस्त्रयुद्धं ।

११. रा ब—महात्मनः ।

१२. ज त—रावणस्य ।

१३. रा भ—औषध्यान० । प—ऊंषध्यान० ।

१४. प्र—लक्ष्मणोत्था० ।

१५. ज त—अतः परमधिकः पाठः—

मंदोदर्यास्तथा केशाकर्षणं चांगदेन च ।

भेदानं देवराजेन रथस्य च महात्मना ॥११६॥ [N
१२०] मातलेर्दर्शनं चैव शक्रवाक्यनिवेदनम् ।
संग्रामे राक्षसेन्द्रस्य प्रभङ्गो रावणस्य च ॥११७॥ [N
१२१] सारथेर्भर्त्सनं चैव रावणेन दुरात्मना ।
देवानां विग्रहश्चैव गगने दानवैः सह ॥११८॥ [N
१२२] द्वैरथं च महाघोरं संक्षाहं क्षितिकंपनम् ।
वधश्च राक्षसेन्द्रस्य त्रिषु लोकेषु विश्रुतः ॥११९॥ [N
१२३] इति षष्ठमिदं काण्डं युद्धकाण्डमिति स्मृतम् ।
सर्गाणां तु शतं ज्ञेयं पञ्चसर्गास्तथैव च ॥१२०॥ [N
१२४] काण्डे ह्यस्मिंस्तथा संख्या श्लोकानां चात्र शब्द्यते ।[१८]

१. त—प्रधानं ।
२. कै—दैवराजेन । प्र प—देवराज्येन ।
३. ब ल—महात्मनः । रा—महात्मनाः ।
४. प—मातुले द० ।
५. त—राक्षस्येंद्र० ।
६. रा—रावणेन ।
७. प्र—विग्रहश्चैव ।
८. रा—गमने । ज—गहने । प्र—गगणे ।
९. त—द्वैरथे । प्र—द्वैरथश्च ।
१०. प्र—सक्षाहभूमिकम्पनं । ज त ट—०हं भूमिकं० ।
११. कै रा ज ब त ल—षष्ठमिदं । प्र—षष्ठिमिदं ।
१२. भ—श्रुतं ।
१३. प—सर्गानां ।
१४. ज त प्र ट—च ।
१५. प—सर्वं ।
१६. ज त—चैव । प्र प भ—चापि ।
१७. ल—शस्यते ।
१८. ट—चास्ति ।

पू१२५] चत्वार्यत्र[1] सहस्राणि पञ्च श्लोकशतानि च ॥१२१॥[2] [N

N] काण्डं[3] ६ सर्गाः १०५ श्लोकाः ४५०० ॥[4] [N

उ१२५] अतस्त्वभ्युदयं नाम सोत्तरं संप्रचक्षते[5] ।

यत्र रावणनारीणां[6] विलापः समुदाहृतः ॥१२२॥ [N

१२६] विभीषणाभिषेकश्च[7] सत्कारो[8] रावणस्य च ।[9]

हनुमत्संप्रवेशश्च[10] मैथिल्याश्चैव दर्शनम् ॥१२३॥ [N

१२७] सीताया निर्गमश्चैव रामेण च समागमः ।

भर्त्सनं चैव सीताया राघवेण[11] महात्मना ॥१२४॥ [N

१२८] परित्यागं[12] च वैदेह्यास्तथा[13] चाग्निप्रवेशनम् ।

अग्निप्रवेशे च तदा[14] अदाहं परमाद्भुतम्[15] ॥१२५॥ [N

---

१. ज त प भ ट—चत्वार्येव । प्र—चत्वार्येव ।

२. ट—अतः परमधिकः पाठः—

पुनस्तूर्यसहस्राणि युद्धकाण्डे निदर्शितौ ।

३. त—युद्धकांडं ।

४. ल प्र प भ—नास्ति ।

५. ब त ल प्र प ट—संप्रचक्ष्यते ।

६. ज त प्र प भ ट—०णदाराणां ।

७. ट—०भिषेकश्च ।

८. के ब ल—संस्कारो राव० ।

ज त—न्यक्कारो रावण० । ट-पुष्पकारोहणं तथा ।

९. ट—अत आरभ्य १३१श्लोकस्य पूर्वार्धान्तः पाठो नास्ति ।

१०. प्र प भ—हनूमत्सं० ।

११. रा ल ज—राघवेन ।

१२. ज त प्र भ—०त्यागञ्च ।

१३. प—सीतायास्त० । ज त प्र—तथैवाग्निप्र० ।

१४. ज त प—तथा ।

१५. ज त प—अदाहः परमाद्भुतः । प्र—ह्यदाहः परमाद्भुतः ।

१२९] ब्रह्मादीनां च सर्वेषां देवानामिह दर्शनम् ।
वृषध्वजस्य देवस्य दर्शनं चात्र कीर्त्यते ॥ १२६ ॥ [N

१३०] पितामहाद्वरश्चापि पितुर्दर्शनमेव च ।
कैकेय्याः शापनाशश्च तुष्टिर्दशरथस्य च ॥१२७॥ [N

१३१] शक्राद्वरस्य संप्राप्तिर्हरीणां प्रतिजीवनम् ।
रत्नानां संविभागश्च राक्षसेन्द्रेण धीमता ॥१२८॥ [N

१३२] पुष्पकारोहणं चैव राघवस्य महात्मनः ।
वानराणां च सर्वेषां राक्षसानां तथैव च ॥१२९॥[8] [N

१३३] प्रतियानं च कथितं विस्तरेण महात्मना ।[8]
भारद्वाजाश्रमप्राप्तिर्ऋषेर्दर्शनमेव च ॥१३०॥ [N

१३४] नन्दिग्रामप्रवेशश्च गुरूणां चैव दर्शनम् ।
अयोध्यायां प्रवेशश्चैव व्रतस्य च समापनम् ॥[12]१३१॥ [N

१३५] अभिषेकश्च रामस्य प्रसादो नगरस्य च ।[14]

---

१. ज त—विष्ण्वादीनां ।
२. ळ—पितामहवरश्चात्र ।
प भ—पितामहाद् वरश्चात्र । प्र—पितामहाद् वरः प्राप्तिः ।
३. त—पितृदर्शनमेव ।
४. भ—पितुर्दर्श० ।
५. प—शक्राद् वरस्य देवस्य ।
६. ज त—जीवनं तथा ।
७. प—रत्नानां ।
८. ज—नास्ति ।
९. ज त प्र भ—भरद्वाजाश्रम० ।
१०. ज त प्र प—अयोध्यासंप्रवे० ।
११. ळ—भ्रतस्य ।
१२. ट—अयोध्यायां च गमनं भरतेन समागमं ।
१३. ज त प्र प भ—प्रमोदो ।
१४. ट—रामाभिषेकाभ्युदयो हरिराज्ञोविसर्जनं ।

यौवराज्यप्रदानं च भरतस्य महात्मनेः ॥१३२॥[3] [N

१३६] मुनीनांमिह संप्राप्तिरुत्पत्तिश्चैव रक्षसाम् ।

त्रैलोक्यविजयाख्यानमहल्याकीर्तनं तथा ॥१३३॥[3] [N

१३७] सीताविवासनं चैव लक्ष्मणेन महात्मना ।[7]

वाल्मीक्याश्रमसंप्राप्ति मैथिल्याश्चात्र कीर्त्यते[10] ॥[3]१३४॥[N

१३८] कुशीलवसमुत्पत्तिरिक्ष्वाकुकुलवृद्धये ।

लवणस्य वधश्चात्र शत्रुघ्नेन प्रकीर्तितः[12] ॥१३५॥ [N

१३९] शम्बूकस्य वधश्चात्र कुम्भयोनिसमागमः ।[15]

अलङ्कारस्य संप्राप्तिः श्वेतोपाख्यानमेव च [3]॥१३६॥ [N

१४०] अश्वमेधसमारम्भो गीतश्रवणमेव च ।

---

१. ब—यौवराज्ये प्र० । प—यौवराज्यं प्रदानं ।

२. प्र—महात्मना ।

३. ठ—नास्ति ।

४. ज—मुनीनां चैव ।

५. ज त—रक्षसः । प—राक्षसाम् । ल—राक्षसम् ।

६. प्र—०निर्वासनं ।

७. ठ—सीतायाश्च परित्यागं रञ्जनं प्रकृतेस्तथा ।

८. ज प्र प भ—वाल्मीकाश्र० ।

९. रा ब ल भ—०स्याश्चात्तु ।

१०. ल—कीर्तते ।

११. रा ल—लवणस्य ।

१२. रा ब ल—नास्ति ।

१३. त—शम्भूकस्य ज—शम्बुकस्य । प्र—शम्बुकश्च । रा ब ल—नास्ति ।

१४. रा ब ल—नास्ति ।

१५. ठ—अगस्त्यप्रमुखानां च महर्षीणां समागमः ।

१६. त—अहंकारस्य ।

१७. के—११४ श्लोकस्य—मैथि०—इत्यारभ्य ११६ श्लोकस्य-संप्राप्तिरित्य-न्तस्य पश्चिमपार्श्वे पुनरपरहस्तेन विन्यासः ।

काव्यस्य गाने विज्ञेयौ स्वपुत्रौ तौ [3]कुशीलवौ ॥१३७॥ [N
१४१] वाल्मीकेश्चैव वाक्यानि विलापो राघवस्य च ।
रसातलप्रवेशश्च वैदेह्याः परमाद्भुतः ॥१३८॥ [N
१४२] राघवस्य च संरंभो दर्शनं परमेष्ठिनः ।
कालदुर्वाससोः प्राप्तिः सन्त्यागो लक्ष्मणस्य च ॥१३९॥ [N
१४३] सुहृदां चैव घोराणां वानराणां महात्मनाम् ।
महाप्रस्थानगमनं स्वर्गप्राप्तिस्तु पुष्कला ॥१४०॥[10] [N
१४४] इत्याभ्युदयिकं[11] काण्डं[12] संभविष्यं सहोत्तरम्[13] ।[14]
नवतिः संख्यया[15] सर्गाः[16] श्लोकानां चात्र कीर्त्यते[17] ॥१४१॥ [N

---

१. ज प्र प भ—चान्ते । त—कान्ते । ल—रागे ।
२. ज त प्र प भ—विज्ञाय ।
३. ज त—तौ सुपुत्रौ । रा—सुपुत्रौ तौ ।
ब—सुपुत्रौ तु । ल—सुमुत्रौ तौ ।
४. ज त—वाक्यान्ते ।
५. के रा ज ब त ल प्र प—परमेष्ठिनः ।
६. के रा त प्र—सत्यागो ।
७. ज त ल प्र प भ—पौराणां ।
८. ज त प्र प—राघवाणां ।
९. ज त प्र प भ—प्राप्तिश्च ।
१०. ट—११६ त आरभ्य नास्ति ।
अधिकश्चायं पाठः—
अनागतं च यत् किञ्चित् रामस्य वसुधातले । प्राप्तरा ……।
११. ज त—इत्याभ्युदयकं । ट—एतदभ्युदयिकं । भ—इत्याभ्युदायिकं ।
१२. भ—काण्डमभविष्यं ।
१३. त—सहोत्तुरम् । ल प्र—महोत्तरम् ।
१४. भ—अतः परमधिकः पाठः—
इति वै सप्तमं काण्डं समाविष्यमिहोत्तरम् ।
१५. रा ज ब प ट—नवतिसंख्यया ।
१६. त—सर्गाः । प—स्वर्गाः ।
१७. ज त—कथ्यते । ट—पठ्यते ।

१४५] त्रीणि श्लोकसहस्राणि नैव श्लोकशतानि च ।[1]
षष्टिः श्लोकास्तथा ज्ञेयाः काण्डेऽस्मिन् परिसंख्यया॥१४२॥[2]
१४६] सर्गाणां षट् शतानीह विंशतिश्चैव संख्यया ।[3][4]
इत्येतद्रामसम्बद्धमाख्यानमृषिसंयतम्[5] ॥१४३॥ [N
१४७] चतुर्विंशतिसाहस्रं[6] सर्वपापभयापहम्[7] ।
आख्यानं रुचिरं दिव्यं कृतं वाल्मीकिना स्वयम् ।
१४८] धन्यं यशस्यमायुष्यं पुत्रीयं[8][9] पुष्टिवर्धनम् ॥१४४॥ [N
पठेदिमां[10] पर्वणि यः समाहितः
१४९] कथां शुचिर्दाशरेथेर्महात्मनः[11] ।
विमुच्यतेऽसौ कलुषेण मानवः
सुखेन[12] गच्छेच्च मृतोऽपि सद्गतिम्[13] ॥१४५॥ [N
इत्यार्षे रामायणे[14] आदिकाण्डे[15] अनुक्रमणिकाऽध्यायः[16] ॥
काण्डं ७ सर्गाः ९० श्लोकाः ३३६० ॥[17]

---

१. ज त प्र ट—तावन्त्येव शतानि ।
२. त—अतः परमधिकः पाठः—
सुन्दरकाण्डं ७ । सर्गाः ३० । श्लोकाः ३९६० । ट—३३६० ।
ज—कांड ७ । सर्ग ९ । श्लोक ३३६० ।
३. के—षट्शतानीह । ४. प्र ट—नास्ति ।
५. ज—०सत्तमः । त—०सत्तमम् । प्र—०संस्तुतं ।
रा—०संयुतम् । प—०संस्कृतम् ।
६. त—पंचविंशतिसा० । ७. ज त—सर्वपापप्रणाशनम् ।
८. के रा ब ळ प्र प भ—वैष्णवं । ९. ज ळ—प्रजीयं । त—पूजीयं ।
१०. त—पठेद्यमां । ळ—पठेदिमं । ११. ज त ळ—शुचेर्दाश० ।
१२. रा ज ब त भ—सुखं च । प्र ळ—सुखं स० । १३. प्र—सद्गतिः ।
१४. रामायणे महर्षिवाल्मीकीये । १५. भ—नास्ति ।
१६. ज त ळ—अनुक्रमणिकाध्याये तृतीयः सर्गः ।
प्र—अनुक्रमणिकानाम तृतीयः सर्गः ।
प—अनुक्रमणिकासर्गः ४ । भ—अनुक्रमणिका ३ ।
१७. ज त ळ प्र प भ—नास्ति ।

श्रुत्वा पूर्वं काव्यबीजं देवर्षेर्नारदादृषिः ।
१] लोकादन्विष्य भूयश्च चरितं चरितव्रतः ॥१॥ [१
पू२] उपस्पृश्योदकं सम्यङ् मुनिः स्थित्वा कृतांजलिः । [२पू
तपोबलेन चान्विष्य चरितं भूरितेजसः ॥२॥ [N
३] जन्म रामस्य सुमहद् वीर्यं सर्वानुकूलताम् ।
लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यवाक्यताम् ॥३॥ [१०
४] मिथिलागमनं चैव धनुषश्चैव भेदनम् । [११उ

---

१. ल—पूर्णं ।
२. ज त ल—०दान्मुनिः ।
३. ज त—लोकमन्विष्य । ल—लोकमन्विष्य ।
४. ल—सत्यं ।
५. प—मुनिस्तथौ ।
६. ज त ल प्र—अतः परमधिकः पाठः—
प्राचीनाग्रेषु धर्मेषु काव्यस्यान्वेषयन् गतिम् ।
प— ,, ,, ०स्यान्वेषयो मतिम् ॥
७. ज त ल—चरितेन च तेजसा ।
८. ज त ल—चैवानुकूलताम् । भ— सर्वानुकम्पतां ।
९. प्र—सत्यशीलताम् ।
१०. प्र—अतः परमधिकः पाठः—
विश्वामित्रस्य चरितं मन्त्रलंभं तथैव च ।
ताडकायाश्च निधनं यज्ञ...........
नाना चित्राः कथाश्चान्या विश्वामित्रमहामुनेः ।
११. प—मैथिल्यागम० ।
१२. प्र—धनुषश्च विभेदनम् ।

रामरामविवादं[1] च[2] गुणं दशरथस्य च ।।[3]४।। [१२पू

५] नाना चित्राः कथाश्चान्यो[4] विश्वामित्रमहामुनेः । [११उ

तथाऽभिषेकं रामस्य कैकेय्या दुष्टभावनम्[5] ।।५।। [१२पू

६] व्याघातश्चाभिषेकस्य[6] राघवस्य[7] विवासनम् ।

राज्ञः शोकं विलापं च मोहं मरणमेव च ।।६।। [१३

७] प्रकृतीनां विषादं[8] च[9] तथैव च विसर्जनम् ।[10]

निषादाधिपसंवादं सूतस्य च विसर्जनम्[11] ।।७।। [१४

८] गङ्गायाश्चैव सन्तारं भारद्वाजस्य[12] दर्शनम् ।[13]

भारद्वाजाभ्यनुज्ञानं[14] चित्रकूटस्य दर्शनम् ।।८।।[15] [१५

९] वास्तुकर्मनिवेशं च भरतागमनं तथा ।

प्रसादनं[16] च रामस्य पितुश्च सलिलक्रियाम्[17] ।।९।। [१६

---

१. ज त ल प्र—०मविवादश्च ।

२. ज त ल प्र—भयं । प—प्रीतिं । भ—वाक्यं ।

३. प्र—अयं श्लोकः ४र्थश्लोकात्पूर्वं विज्ञेयः ।

४. प—कथाश्चापि ।

५. ज त ल प्र प—दुष्टभावतां । भ—दुष्टभावना ।

६. के रा ब—व्याघातश्चाभि० । प—०श्च भिषेकश्च ।

७. ज—रामस्य सुमहात्मनः । त ल—रामस्य च महात्मनः ।

८. ज—विषादं च । त—विषादश्च । ल—विषादं च ।

९. भ—विषादश्च ।

१०. प—अतः परमधिकः पाठः—

तमसायां विवासं च प्रजानां च निवर्तनं ।

११. रा ज त ल—निवर्तनं । प्र—निवर्तते ।

१२. ज ब त ल प्र प भ—भरद्वाजस्य ।

१३. प—नास्ति ।

१४. त ल प्र—भरद्वाजाभ्यनुज्ञानात् । प—भरद्वाजाभ्यनुज्ञा च ।
भ—भरद्वाजाभ्यनुज्ञां च ।

१५. ज—नास्ति ।

१६. ज त ल—आश्वासनं ।

१७. के ज त ल प भ—०क्रियाम् । प्र—सलिलं क्रियाम् ।

१०] पादुकस्या[1]भिषेकं च नन्दिग्रामनिवेशनम्[2] ।
दण्डकारण्यगमनं सुतीक्ष्णेन समागमम्[3] ॥१०॥[4] [१७

११] अनसूयासमस्यां च अङ्गरागस्य चार्पणम् ।
शरभङ्गाश्रमाभ्याशं[5] वासवस्य च दर्शनम् ॥[6]११॥ [१८

१२] अगस्त्याश्रमवासं च अगस्त्यस्य[7] विसर्जनम् ।
समागमं विराधेन[8] वासं पञ्चवटे तथा ॥१२॥[9] [१९

१३] हासं शूर्पणखाया[10]श्च विरूपकरणं[11] तथा ।
वधं खरत्रिशिरसोः कथनं[12] रावणस्य च ॥१३॥ [२०

१४] मारीचस्य[13] विनाशश्च वैदेह्या हरणं[14] तथा ।

---

१. ज त प भ—पादुकास्वभिषेकं । ल—०कासु मि० ।
प्र—०कायभिषेकञ्च ।
२. ज त ल—०मप्रवेशनम् ।
३. प्र—विराधस्य वधं तथा ।
४. प्र—अतः परमधिकः पाठः—
दर्शनं शरभङ्गस्य सुतीक्ष्णेन समागमे ।
५. ज त ल—शरभङ्गाश्रमे वासं । ब—०ङ्गाश्रमावासं ।
भ—शरभङ्गाश्रमाभ्यासे ।
६. प—नास्ति ।
७. ज त ल प्र भ—अगस्त्यात्त ।
८. ज—कबंधेन । ल—कबंधेन । त—विबंधेन ।
९. प्र—दर्शनं चाप्यगस्त्यस्य धनुषो ग्रहणं तथा ।
विसर्जनमगस्त्यात्त वासं पञ्चवटे तथा ।
१०. के रा ल त प—शूर्पनखा० ।
११. प्र—विरूपकरणम् ।
१२. प—व्युत्थानं ।
१३. ज ल—मारीचिप्रविनाशं च । त—मारीचिप्रविनाशे च ।
१४. ज त ल प्र—वैदेहीहरणं ।

जटायुषो[1] वधश्चैव[2] विलापो[3] राघवस्य च[3] ॥१४॥[4] [२१

१५] कबन्धग्रहणं[5] चैव कबन्धस्य वधं तथा ।

शबर्या[6] दर्शनं चैव पम्पाया दर्शनं तथा[7] ॥१५॥

१६] विलापं चैव पम्पायां राघवस्य महात्मनः ।[8] [२२

ऋष्यमूकाभिगमनं[9] सुग्रीवेण[10] समागमम्[11] ॥१६॥

१७] प्रत्ययोत्पादनं चैव बालिसुग्रीवविग्रहम्[12] । [२३

बालिप्रमथनं[13] राज्ये सुग्रीवप्रतिपादनम्[14] ॥१७॥

१८] ताराविलापसमये[15] वर्षारात्रिनिवासनम्[16] । [२४

१. ज त ळ प्र प भ—जटायोर्निधनं चैव ।

२. ज त ळ प्र भ—विलापं । प—कबन्धस्य ।

३. प—च दर्शनं । ज—रागवस्य च ।

४. ब रा—नास्ति ।

प—सीतायाश्च प्रक्षोभं च मारीचस्य वधं तथा ।
वैदेह्या हरणं चैव शोको वै राघवस्य च ॥
गृध्रराजेन संभासं धर्मज्ञेन महात्मना ।
जटायोर्निधनं चैव कबंधस्य च दर्शनम् ॥

५. ज त—कबंधदर्शनं । ळ—कबंभदर्शनं ।

६. ळ—सबर्या द० । भ—शबर्या द० ।

७. प—हनू [ मद् ? ] दर्शनं तथा ।

८. प्र—नास्ति ।

९. त—ऋषिमूकाभि० ।

१०. रा—सुग्रीवेन ।

११. ज त ळ प्र प भ—सख्यं ।

१२. ज ब त ळ प्र प भ— वालिसु० ।

१३. ज ब त प्र भ—वालिप्र० । प—वालिप्रथमनं ।

१४. सुग्रीवस्याभिषेचनं ।

१५. ज त ळ प—ताराविलापशमनं । प्र—०लापं समयं । भ—लापसमयं ।

१६. ळ भ—वर्षारात्रवि० । प—वर्षारात्रीवि० ।

कोपं राघवसिंहस्य बलानामुपसङ्ग्रहम्[1] ॥१८॥
१९] दिशः[2] प्रस्थापनं चैव पृथिव्याश्च[3] निवेदनम् । [२५
अंगुलीयप्रदानं[4] च तथैव[5] बिलदर्शनम्[6] ॥१९॥
२०] प्रायोपवेशनं चैव सम्पातेश्चैव दर्शनम् ।[8] [२६
पर्वतारोहणं चैव सागरस्य च लंघनम् ॥२०॥ [२७पू
२१] सिंहिका[9]दर्शनं चैव लङ्कानिलयदर्शनम्[7] ।[10]
रात्रिप्रवेशे[11] लङ्कायां चिन्ता[12] हनुमतस्तथा ॥२१॥ [२८
२२] आपानभूमिगमनं[13] अवरोधस्य[14] दर्शनम् ।[15] [२९पू

१. रा ज त—बाळानामुप० ।
२. ज त ल—दिक्षु ।
३. प—पृथिव्यारचैव वर्णनं ।
४. प्र—अंगुरीयप्र० ।
५. प्र—भ्रष्यस्य ।
६. रा—बलिदर्शनं ।
७. त—लंकानिळयदर्शनम् । भ्रमान्मध्यस्थं पाठं त्यक्त्वा २१श्लोक-
द्वितीयपादेन संबंध: कृत: ।
८. प्र—अत: परमधिक: पाठ:—
समुद्रवचनाच्चैव मैनाकस्य च दर्शनं ।
राक्षसीतर्जनं छायाग्राहिण्यारचैव दर्शनं ॥
९. प्र—सिंहकायाश्च निधनं ।
१०. रा ब त प भ—नास्ति । के—उत्तरपार्श्वे पुनर्विन्यासः ।
११. ज त ल—रात्रौ प्रवेशं । रा प्र—रात्रिप्रवेशं ।
प—रात्रिप्रवेशन० । भ—रात्रिप्रवेशो ।
१२. ल प—चिंतां । त—चिंतां ।
१३. रा ब—आपानुभूमिग० ।
१४. रा—अवरोधस्य ।
१५. प्र—अत: परमधिक: पाठ:—
दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम् ।

अशोकवनिकायानं सीतायाश्चापि दर्शनम् ॥[3]२२॥ [३०पु

२३] राक्षसीदर्शनं चैव रावणस्य च दर्शनम् ।[5] [२९उ

संभाषणं च मैथिल्या अभिज्ञानस्य चार्पणम् ॥२३॥ [३०उ

२४] मणिप्रदानं सीताया वृक्षभङ्गं तथैव च । [३१उ

राक्षसीविद्रवं चैव किङ्कराणां निबर्हणम् ॥२४॥

२५] अमात्यपुत्रनिधनं सेनापतिवधं तथा । [३२

अक्षस्य निधनं चापि निर्याणेन्द्रजितस्तथा ॥२५॥

२६] ग्रहणं वानरेन्द्रस्य लङ्कादाहाभिमर्दनम् । [३३

प्रतिप्रयाणमेवापि मधूनां भक्षणं तथा ॥२६॥

२७] राघवाश्वासनं चापि मणिनिर्यातनं तथा । [३४

संगमं च समुद्रस्य नलसेतोश्च बन्धनम् ॥२७॥[14]

१. ज त—अशोकवनिकायां च ।

२. ज त प—सीतायाश्चैव ।

३. ल—नास्ति ।

४. त प्र प—राक्षसीतर्जनं चापि ।

५. ज—नास्ति ।

६. त—मणिप्रधानं ।

७. ज त प्र प—वनभङ्गं ।

८. ज त प—वधं तथा ।

९. ज प—निर्यातेन्द्रजि० । त–निर्याणेन्द्रजि० । प्र—निर्यानेन्द्रजि० ।

१०. भ—०हाभिमर्शनं । ल—लङ्कादाहे······ ।

११. ल—प्रतिप्रवणमे० ।

१२. प—चापि ।

१३. प—दर्शनं । ल—नास्ति ।

१४. रा—अतः परमधिकः पाठः—

प्रतिप्रयाणमे ।

२८] तरणं च समुद्रस्य रौद्रलोकोपरोधनम् । [३५
विभीषणेन संसर्गो वधोपायनिवेदनम् ॥२७॥
२९] कुम्भकर्णस्य च वधं मेघनादवधं तथा । [३६
रावणस्य विनाशं च सीताऽवाप्तिं तथैव च ॥२८॥
३०] विभीषणाभिषेकं च पुष्पकारोहणं तथा ।[8] [३७
अयोध्यायां च गमनं भरतेन समागमम् ॥[10] २९॥
३१] रामाभिषेकाभ्युदयं हरिरक्षोविसर्जनम् ।[12]
सीतायाश्च परित्यागं प्रकृतीनां च[13] रञ्जनम् ॥३०॥ [३८

---

१. त—प्रभावं च स० । प्र—प्रतारम्च स० । ल—नास्ति ।
२. त प्र प—रौद्रं कल्लोपरो० ।
३. ज ल—नास्ति ।
४. कै रा—संसंगो । ज त ल प्र—संसर्गं । प—संतु संसर्गो वधो(पा)यनि० ।
५. प—वधं घोरं ।
६. प्र—शोकं राक्षसयोषितां ।
७. प्र—सीतात्यागं तथैव च ।
८. प्र—अतः परमधिकः पाठः—

ब्रह्मादिदेवतानाञ्च दर्शनं वचनं तथा ।
सीतायाः प्रत्ययं चैव सीताप्राप्तिमरे(:)पुरं ॥
जीवनं वानराणाञ्च पुष्पकारोहणन्तथा ।

९. प—अयोध्यागमनं चैव । भ—अयोध्यायाश्च ग० ।
१०. प्र—अयोध्यायाश्च गमनं भरद्वाजसमागमं ।

प्रेषणं वटु [ वायु ] पुत्रस्य भरतेन समागमे ॥

११. ज ल—ेकाभ्युदयो ।
१२. त—नास्ति ।
ज ल प—अतः परमाधिकः पाठः—

अगस्त्यप्रमुखानां च महर्षीणां समागमं ।

प्र—अगस्त्यप्रभृतीनाञ्च
राक्षसानां समुत्पत्ती रावणस्य जयं ततः ॥
१३. ज त ल—रंजनं प्रकृतेस्तथा ।

१३] अनागतं च यत्किञ्चिद्रामस्य वसुधातले । [३९पू
प्राप्तराज्यस्य रामस्य चरितं यच्च धीमतः ॥३१॥[4] [N
१४] अभ्यागममृषीणां च शत्रुघ्नस्य विसर्जनम् ।[6]
वनप्रसूतिं सीताया लवणस्य रणे वधम् ॥३२॥[8] [N
३५] कालदुर्वाससोः प्राप्तिं लक्ष्मणस्य विसर्जनम् ।
स्थापयित्वा सुतान् राज्ये यथा रामो दिवं गतः ॥३३॥[9] [N

---

१. त—तु ।

२. प—प्राप्तराजस्य । ब—प्राप्तं राज्यस्य ।

३. ज त ल—तस्य ।

४. ज त ल प—अतः परमधिकः पाठः—

तच्चकारोत्तरे कांडे चरितं भगवानृषिः ।

५. प्र—अभ्यागतमृ० ।

६. ज त ल—नास्ति ।

७. ज त ल प्र प भ—वने प्रसूतिं ।

८. प्र—अतः परमधिकः पाठः—

मथुरायां निवासश्च मैथिल्यानयनं तथा ।
यज्ञस्यान्ते च सीतायाः प्रत्ययस्य निदर्शनं ॥
भूमौ प्रवेशं सीतायाः सन्तापं राघवस्य च ।

प—मथुराया निवेशं च यज्ञारंभस्तथैव च ।
यज्ञांते चैव सीतायाः पातालगमनं तथा ॥

९. प्र—अतः परमधिकः पाठः—

ब्रह्मवानरगोपुच्छैः पौरजानपदैरपि ।
एतद् सुतपसा दृष्ट्वा निखिलेन महामतिः ।
चरितं सत्यसंधस्य सर्वं काव्ये चकार ह ॥
ततः पुनरहः किञ्चिदुपश्लोकायते मुनिः ।
तं ब्रह्मा संग्रहस्येव श्लोक इत्यब्रवीद् वचः ॥
ततः शिष्यांश्च धर्मज्ञान् सर्वान् काव्ये तपस्विनः ।
अभिवाद्य महात्मानमृषिं काव्यं व्यचारयत् ।

३६] त्रैलोक्यदर्शी तत् सर्वं तपोयोगबलेन च ।[1]
दद्दर्श चैव प्रत्यक्षं पाणावामलकं यथा ॥३४॥ [N

३७] दृष्ट्वा चानन्तरं चक्रे रामस्य चरितं महत् ।
धर्मकामार्थसंयुक्तं पुण्यश्रवणकीर्तनम् ॥३५॥ [N

३८] श्रुतिरत्नचयाकीर्णं काव्यसागरमद्भुतम् ।
कृत्वा चेदमशेषेण काव्यं रामायणाह्वयम् ॥३६॥ [N

---

पादबद्धश्चतुष्पादः शोकः श्लोकत्वमागतः ॥
तस्य बुद्धिरियं जाता वाल्मीकेर्भावितात्मनः ।
कृत्स्नं रामायणं काव्यं स्वयमेव करोम्यहम् ॥
प्रथमं ब्रह्मणा प्रोक्तं नारदस्य च दर्शनम् ।
श्रुत्वा स वक्ष [स्तु ?] मात्रं हि धर्मात्मा धर्मसंहितम् ॥
व्यक्तमन्विष्य भूयो वै यद् वृत्तं तत्तत: ।
गुणावासस्य रामस्य राज्ञो दशरथस्य च ॥
सभार्यस्य सराष्ट्रस्य शा [सा ?] न्तः पुरजनस्य च ।
हसितं भाषितं यच्च गतं यच्चाप्यनुष्ठितं ॥
तत् सर्वं धर्म्मवीर्य्येण यथावत् संप्रपश्यति ।
भरतस्य यथा वृत्तं शत्रुघ्नस्य च धीमतः ॥
वसिष्ठश्च [स्य ?] सुमन्तोश्च वामदेवस्य चैव हि ।
विश्वामित्रस्य देवर्षेः राज[ र्षे ]र्जनकस्य च ॥
रक्षसां वानराणां च यथा वीर्यं विचेष्टितं ।
सीतासहायेन किञ्चित् कथितं वसता वने ॥
महासत्त्वेन रामेण लक्ष्मणेन च धीमता ।
ततः पश्यति तत्सर्वं वाल्मीकिर्योगमास्थितः ॥

१. कै ब भ—त्रैकाल्यदर्शी ।

२. प्र—अत: परमधिकः पाठः—

तत् सर्वं सर्वतोऽन्विष्य रामवृत्तान्तमात्मवान ।

३. रा—मणावाम० ।

४. ज त ल—धर्मार्थकामसं० ।

५. रा ब— ०त्नमयाकीर्णं । त— ०त्नमयाकीर्णं ।

३९] चिन्तयामास क इदं लोकेऽस्मिन्प्रथयिष्यति । [४.३उ
अथ चिन्तयतस्तस्य महर्षेर्भावितात्मनः ॥३७॥

४०] तदा जगृहतुः पादौ मुनिवेषधरौ वने । [४.४
वाल्मीकिशिष्यौ तरुणौ रूपौदार्यगुणान्वितौ ॥३८॥

४१] कुशीलवाविति ख्यातौ सीतारामाङ्गसंभवौ ।[2] [४.५
स तौ मूर्धन्युपाघ्राय वाल्मीकि भगवानृषिः[3] ॥३९॥ [N

४२] उवाचेदं तदा वाक्यं प्रणतावग्रतः स्थितौ ।
आर्षं रामायणं काव्यमिदं तावन्मया कृतम् ॥४०॥ [N

४३] गृह्यतां मन्नियोगेन पुण्यश्रवणकीर्तनम् । [N
पौलस्त्यवधसंयुक्तं धर्मकामार्थसंहितम् ॥४१॥ [४.७उ

४४] पाठे गेये[10] च मधुरं प्रमाणैस्त्रिभिरुज्ज्वलम्[11] ।
तन्त्रीगीतैश्च[12] मधुरैरन्वितं[13] सप्तभिः स्वरैः ॥४२॥ [४.८

---

१. त ल—ततो । ज—तु तौ । प—मुने ।

२. प्र—अतः परमधिकः पाठः—

राजपुत्रौ यशस्विनौ ।

भ्रातरौ स्वरसम्पन्नौ ददर्शाश्रमवासिनौ ॥

स तु···विनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।

३. त ल—०गवान् मुनिः ।

४. प्र—प्रोवाचेदं ।

५. ज त ल—ततो ।

६. ज—प्रणतावग्रतौ ।

७. ज—गृहीतं । त ल प्र— गृह्णीतं ।

८. ज—०र्थसंविधं ।

९. प्र—पाठ्यं ।

१०. रा—योगे ।

११. ज त ल प्र प भ—०स्त्रिभिरन्वितं ।

१२. ज त ल प्र प भ—तन्त्रीगीतैश्च ।

१३. कै—मधुरमंधितं । रा व—मधुरमन्वितं ।

४५] जातिभिः सप्तभिर्युक्तं [1]श्रोत्रश्रुतिमनोहरम् । [४.८
शृंगारवीरबीभत्सरौद्रहास्य[2]भयानकैः ॥४३॥
४६] करुणाद्भुतशान्तैश्च[3] युक्तं काव्यरसैरपि । [४.९
एवमुक्त्वा तु[4] तौ बालौ भगवानृषिसत्तमः[5] ॥४४॥
४७] सम्यगध्यापयामास काव्यं रामकथाऽऽश्रयम्[6] ।
वाग्विधेयं [7]ततस्ताभ्यां कृतं तच्च विशेषतः[8] ॥४५॥ [N
४८] पुण्यं रामायणं[9] काव्यं तदा तौ मुनिरब्रवीत् ।
गीयतामिदमाख्यानं भवद्भ्यामृषिसंसदि ॥४६॥ [N
४९] राजर्षीणां पुण्यकृतां साधूनां च समागमे ।
गुरुणैवमनुज्ञातौ ततस्तौ देवरूपिणौ ॥४७॥ [N
५०] कुशीलवौ राजपुत्रौ[10] प्रकृत्या मधुरस्वरौ[11] ।
रूपानुरूपौ[12] रामस्य बिम्बाद्बिम्ब[13]मिवोद्धृतौ ॥४८॥ [४.११

---

१. ल प्र—श्रोतुः श्रुतिम० । प—मनः श्रुतिसुखावहं ।
२. प्र—०त्सरौद्रश्च सभयानकः ।
भ—शृङ्गारवीरकरुणाहास्यरौद्रभ० ।
३. प्र—करुणाद्भुतहास्यैश्च । भ—बीभत्साद्भुतशा० ।
४. ज त ल प्र—च ।
५. ज त ल—भगवान् मुनिसत्तमः ।
६. भ—रामायणाश्रयं ।
७. ज त ल—सदा ताभ्यां । ब— कृतस्ताभ्यां ।
प्र—तदा ताभ्यां । प—यदा ताभ्यां ।
८. प्र—तथाप्यशेषतः ।
९. ज—रामायणे ।
१०. प्र—रामपुत्रौ । प—रामसुतौ ।
११. रा त—मधुरस्वनौ ।
१२. ज ल—अनुरूपौ च । त—अनुरूपस्य । रूपानुरामो ।
१३. ज—०म्बमिवोधतौ । बिम्बाद्बिम्बमिवोदितौ ।
ल—० म्बमिवेद्धृतौ । प्र—०म्बामिवोद्धृतौ । प—सूर्यबिम्बादि० ।

५१] वेदवेदाङ्गेतिहासशास्त्रेषु परिनिष्ठितौ ।[3] [N
जगतुस्तौ ततः काव्यं मधुरं मधुरस्वरौ ॥४९॥
५२] यथोपदिष्टमृषिणा सन्निधौ ब्रह्मवादिनाम् । [४.१३
तयोर्ब्रह्माऽभवत् प्रीतः सेन्द्राश्च सुरसत्तमाः ॥५०॥ [N
५३] गन्धर्वाः पन्नगाश्चैव पतङ्गाश्च महर्षिभिः । [N
तौ कदाचित् समेतानामृषीणां देवरूपिणौ ॥५१॥[13]
५४] काव्यं रामायणं मध्ये सहितावभ्यगायताम् । [४.१४

१. प्र—०दाङ्गेतिहासे शा० । प—०दाङ्गेतिहासपुराण० ।
२. ल—०निष्ठतौ । प्र—०निष्ठुतौ ।
३. प्र—अतः परमधिकः पाठः—
तौ तु गन्धर्वतत्त्वज्ञो [ौ ?] स्थानमार्च्छनकोविदौ ।
भ्रातरौ स्वरसम्पन्नौ गन्धर्वाविव रूपिणौ ॥
४. त—जगतो तु ।
५. ज त ल प्र प भ—तदा ।
६. रा ज त ल—मधुरस्वनौ ।
७. त ज—अथोपदि० ।
८. प्र—ब्रह्मवादिना ।
९. प्र भ—०पतगाश्चैव । प—०र्वाप्सरसश्चैव ।
१०. ज ल—पतगाश्च । प्र प भ—पन्नगाश्च ।
११. ज त ल—महर्षयः ।
१२. ज त ल—चैव सन्निधौ ।
१३. प्र—अतः परमधिकः पाठः—
काव्यं तज्जगतुः प्रीतौ कुमारौ कलमद्भुतं ।
श्रुत्वा च मुनयः सर्वे परं विस्मयमागताः ॥
हर्षविस्मयसम्पन्नैर्नेत्रैरनिमिषैरिव ।
समीयुस्तत्र तत् काव्यं श्रोतुकामाः सहस्रशः ॥
१४. ज त ल—नाम ।
१५. रा—सहिता चाभ्यगा० । ज—सहितमभ्यगा० ।
कै ब त ल—संहितावभ्यगा० । प्र—साहितातुभ्यगायता ।

